# विध्यर्थविचारः

## (विशेषतो मण्डनमिश्रदृष्ट्या)

**डॉ. वृजकिशोरत्रिपाठी**
उपाचार्यः, संस्कृतस्य
राजकीयस्नातकोत्तरमहिलामहाविद्यालये
अदलहाट, मीरजापुरम्



( सारस्वत्याः सुषमायाः ६१ व. १-२ अ. प्रतिमुद्रणम् )
ज्येष्ट-भाद्रपद-पूर्णिमे, वि.सं. २०६३




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी-२२१००२ (उ.प्र.)

# विध्यर्थविचारः
## (विशेषतो मण्डनमिश्रदृष्ट्या)

**डॉ. वृजकिशोरत्रिपाठी**
उपाचार्यः, संस्कृतस्य
राजकीयस्नातकोत्तरमहिलामहाविद्यालये
अदलहाट, मीरजापुरम्

***

विधिनिषेधमयं वितनोत्यसज्जगदिदञ्जनकर्मसमाश्रयत्।
परमतीत्य ततो विलसत्प्रतत् किमपि मे विकसेद्धृदि वस्तुसत्।।१।।
विधिनिषेधमयं वचनं श्रुतिर्विदधती परिपालयते जगत्।
यदधिसंलभते नु समाचरद्विधिसमं पुरुषार्थचतुष्टयम्।।२।।
विध्यर्थे विविधा वादा विद्यन्त इह शास्त्रिणाम्।
तेषु मण्डनमिश्रस्य प्रगुणत्वाद्विशिष्यते।।३।।

अथेह विचारयामो विध्यर्थं यदाश्रित्य प्रवर्तते इहामुत्रिकव्यवहारप्रचारः। न हि लोकेऽस्मिन्विधिं विना समाजे मानवानामाहारव्यवहारात्मको जागतिकः समन्वयः सम्पादयितुं शक्यते। एतदर्थञ्चातीवोपयुज्यतेऽतो विध्यर्थज्ञानमपीति न विदामविदितम्। वयं यदेकतः स्वार्थसम्पादनाय कनिष्ठानाज्ञापयामस्त-तोऽपरत्र प्रार्थयामहेऽपि ज्येष्ठान्। समानमानैरस्माकमेतदन्योन्यसमित्य-धिष्ठितानुमत्या सम्पद्यते। एत आज्ञादयोऽर्था ज्ञानरूपेणेच्छात्मना वाऽऽज्ञापके राजनि चेतने विद्यन्ते; तस्माच्चेतनधर्मा अभिधीयन्ते। सर्वेऽप्येते 'प्रवर्तना', 'प्रेरणा' वेत्येकस्यैव शब्दस्य वाच्यार्थाः[१]। यज्ज्ञानं क्रियाप्रवृत्तिकारणं, सा प्रवर्तना[२]। अतः 'प्रवृत्तिहेतुर्व्यापारः प्रवर्तने'ति वक्तुं शक्यते[३]। प्रवर्तना चेयं सर्वानुभव-सिद्धा। 'गामानये'ति गुरुवाक्यात् प्रवृत्तस्य शिष्यस्य भवति ज्ञानम्—'गुरुणा प्रेरितोऽहमिदं कार्यमकार्षमि'ति।

---

१. अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि। तत्रैव लिङ्विधातव्यः किं भेदस्य विवक्षया।।
(वैया.भू.सा., लिङर्थप्रकरणम्, पृ. १९५)

२. प्रवर्तनात्वञ्च—प्रवृत्तिजनकज्ञानविषयतावच्छेदकम्। (तत्रैव)

३. प्रवर्तना हि प्रवृत्तिहेतुर्व्यापारः। (गीतायां मधुसूदनी-टीका, अध्या. १८, श्लो. १८, पृ. ७०३।

यथा लौकिकस्वार्थसम्पत्तिरस्माकं सम्पद्यते चेतनगुरुवाक्यप्रवृत्तानां कर्मणि प्रवृत्त्या, तथैवामुष्मिकस्वार्थसम्पादनायास्ति प्रवर्तको वेदः। तद्यथा—'स्वर्गकामो यजेत' इति।

नन्वचेतनेऽपौरुषेये च वेदे चेतनधर्मः प्रवर्तना कथं सम्भवतीति चेत्, न, वैदिक्याः प्रेरणाया शब्दधर्मत्वात्। शब्दनिष्ठोऽयं धर्मः, चोदना, प्रेरणा, विधिरुपदेशः, शाब्दीभावना चेत्येतैः शब्दैर्निगद्यते[१]। शब्दधर्मोऽयं 'प्रभाकर'-मतेऽलौकिकः, कुमारिलमते तु 'लौकिक' एव[२]। प्रेरितपुरुषस्य प्रवृत्तिरूपामार्थी-भावनाम्प्रति अन्वयव्यतिरेकद्वारा हेतुत्त्वेन निश्चीयते, प्रेरकवाक्यघटको 'विधि(लिङ्)'-शब्द इति। यतो हि, पुरुषप्रवृत्तिर्ज्ञातैवानुष्ठातुं योग्याऽतो वस्तुतो विधिशब्दः प्रवृत्तिज्ञानस्यैव कारणम्, तथापि सः परम्परया प्रवृत्तेरपि कारणम्। प्रेरितपुरुषस्य प्रवृत्तिरूपाया आर्थीभावनाया ज्ञानम्प्रति लिङः जनको व्यापारोऽस्ति, 'पुरुषप्रवृत्तिवाचकत्वम्' इति। 'पुरुषप्रवृत्तिवाचक'स्यार्थः— 'पुरुषप्रवृत्तिवाचकत्वशक्तियुतं विधिशब्दज्ञानमिति, शब्दस्य स्वज्ञानद्वारैव प्रवृत्तिजनकत्वात्'[३]। इदमस्य तात्पर्यम्—यावत्पुरुषप्रवृत्तिनिरूपितवाचकत्वशक्ति-मद्विधिशब्दज्ञानं नोदेति तावत् पुरुषप्रवृत्तिर्न सम्भवति। अत एवोक्तमाचार्येण मण्डनमिश्रेण—

साधने पुरुषार्थस्य सङ्गिरन्ते त्रयीविदः।
बोधं विधौ समायात्तमतः स प्रविविच्यते[४]।।

तस्मादेतल्लभ्यते यत्प्रवर्तनाव्यापारज्ञानं विना पुरुषप्रवृत्त्यनुपपत्तेः, पुरुषः प्रवर्तकवाक्यात्प्रवृत्तिजनकव्यापारं ज्ञात्वैव प्रवर्तत इति। प्रवृत्तः पुरुषः प्राङ् 'माम्प्रवर्तयती'त्येतावन्मात्रमेव विज्ञाय प्रवर्तते, तदानीमेव 'किंरूपोऽयं प्रवर्तनाव्यापारः?' इति व्युत्पत्त्यनुपपत्तेः। पश्चाद्विशेषरूपजिज्ञासायामस्ये-दमित्थमाकारः परिज्ञायते। अत एवापाणिनिः आधुनिका अप्याचार्या विध्यर्थ-(प्रवर्तनाव्यापार)स्वरूपनिरूपणे कृतयत्ना दरीदृश्यन्ते।

---

१. 'स एव धर्मश्चोदना प्रवर्तना प्रेरणा विधिरुपदेशः शब्दभावनेति चोच्यते'।।
(गीता, मधुसूदनी-टीका, पृ. ७०३)

२. लौकिकशब्दाबोध्यं लौकिकप्रमाणमात्रागोचरं नियोगकार्यापूर्वादिपदाभिधेयं यथाकथञ्चिच्छब्द-धर्मत्वाच्छब्दधर्म इति केचित्प्राभाकराः कल्पयन्तीत्यर्थः। आचार्यो मां प्रेरयति, विधिर्मां प्रवर्तयतीत्यनुभवयोः समानाकारयोर्विषयवैजात्यकल्पनस्यान्याय्यत्वाद् उक्तानुभवादेव प्रमाणाद्भट्टानुयायिनः केचित्कल्पयन्तीत्यर्थः'। (गीता, गूढार्थतत्त्वालोकः, पृ. १५५)

३. गीता, मधुसूदनी-टीका, ७०३ पृष्ठे।

४. विधिविवेकस्य प्रथमा कारिका।

**आचार्याणां मतेषु विध्यर्थः**

विषयस्य सुज्ञेयत्वायात्र केषाञ्चित्प्रमुखानामाचार्याणां विध्यर्थविषयकाणि मतान्युपस्थापयामः। वैयाकरणसम्प्रदाये पाणिनेर्विध्यादिषु[1] षट्सु लिङर्थेषु भर्तृहरिर्विध्यादिषु चतुर्ष्वनुस्यूतेन प्रवर्तनात्वेन साकं सम्प्रश्नप्रार्थने अपि स्वीकुरुते[2]। ततोऽर्वाचीनानां शाब्दिकानां विधिरस्ति, 'इष्टसाधनत्वमि'ति[3]। प्राङ्नैयायिकेभ्यो नव्यानामयमेव भेदो यन्नवीना इष्टसाधनतायां, बलवदनिष्टाजनकतायां कृतिसाध्यतायाञ्च लिङः पृथक् पृथक् शक्तिमभ्युपगच्छन्ति। ततश्शक्तित्रयमेतेषाम्। नव्यास्तु विशेष्यविशेषणभावापन्नेषु त्रिष्वप्येकामेव शक्तिं स्वीकुर्वन्ति[4]। मीमांसकेषु भट्टमतानुयायिनो 'लिङादिशब्दगतस्वार्थप्रकाशनसामर्थ्यरूपमभिधाव्यापारमे'व लिङर्थमाचक्षते[5]। प्रभाकरस्तु, कार्यात्मानमपूर्वाख्यं नियोगमेव लिङर्थमुरीकरोति[6]। 'विधिविवेका' भिधेमहनीये ग्रन्थे आचार्यप्रवरेण मण्डनमिश्रेण च इष्टसाधनत्वमेवात्मीक्रियते लिङर्थत्वेन[7]। एतदतिरिक्तमप्युक्तसम्प्रदायान्तःपातिनामन्येषामप्याचार्याणां मतानि समुपलभ्यन्ते, यथा— 'उदयनाचार्यस्य' 'आप्ताभिप्रायविशेष' एव विध्यर्थ इति[8]। परं समेषाम्मतानामुल्लेखेनात्र विरम्यते विस्तरभियेति।

मण्डनमिश्रस्य ग्रन्थरत्नं 'विधिविवेक'माधारीकृत्यालेखोऽयं विरच्यते। अतस्तदनुसारमेव विषयानुपस्थापयामः। तत्र हि 'विधिविवेके' मण्डनमिश्रेण पूर्वार्द्धे पूर्वपक्षरूपेण प्रमुखतो भट्टप्रभाकरयोर्मते समुपस्थाप्योभयोः खण्डनं कृतम्। तत उत्तरार्द्धे स्वमतं व्यवस्थापितम्। मध्ये मध्ये आनुषङ्गिकविषयविश्लेषणं ग्रन्थकृतो महागाम्भीर्यपाण्डित्यप्रदर्शकम्।

---

१. 'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्'। (पा.सू. ३.३.१६१)
२. मीमांसान्यायप्रकाशटिप्पण्याम्, पृ. १७८।
३. वैयाकरणभूषणसारः, पृ. १९५।
४. न्यायसिद्धान्तमुक्तावली, पृ. ४७५ तः ४९० यावत्।
५. 'अभिधाभावनामाहुरन्यामेव लिङादयः। (श्लोकवार्तिकोद्धरणम्, मीमां.न्याय. १८२)
६. विधिविवेकः, पृ. ३५।
७. पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनाम्।। (वि.वि., पृ. १७३)
८. न्यायकुसुमाञ्जलिः, पञ्चमस्तबकः, का. १५,१६ च।

**शब्दविधिवादः**

यथोक्तं लिङः श्रवणेन पुरुषः प्रवर्तते। तस्मादेवास्ति प्रवर्तना—'लिङ्विषयको ज्ञानरूपो व्यापार' इति। किमयं लिङ्शब्दरूपः? अर्थात्—तस्य खलु लिङादेरयस्कान्तमणेरिव वस्तुस्वभावजोऽतिशयो येनायस्कान्तमणेर्लोहमिव चेतनं प्रवर्तयति! आहोस्विच्छब्दस्य स्वाभिधेयजननसामर्थ्यात्माऽभिधाव्यापार एव विध्यर्थः। किं वा, विध्यादिषडर्थेष्वन्यतमो विधिः?

**शब्दविधिवादनिरसनम्**

मण्डनमिश्रेण पञ्चभिर्हेतुभिश्शब्दस्य विधित्वं खण्डितम्—

प्रमाणत्वादनियमात्प्रवृत्तेः संविदाश्रयात्।
समभिव्याहृतेः शब्दो न विधिः कार्यकल्पनात्[1]।।

शब्दो न विधिः, विधिरूपशब्दस्य प्रमाणाभ्युपगमात्। तज्ज्ञापकं हि जैमिनीयं सूत्रम्—'चोदनालक्षणोऽर्थो धर्म'[2] इति। प्रवृत्तिहेतुं किञ्चिदर्थं बोधयन्नेव प्रवर्तकश्शब्दः प्रमाणं भवितुमर्हति, नेतरः। स्वयमेव प्रवर्तकश्शब्दश्च प्रवृत्तेर्जनको (कारको) हेतुर्भविष्यति, न च कारको हेतुः प्रमाणं, किन्तु ज्ञापक एव। इत्ययं प्रथमो हेतुः। द्वितीयोऽत्र हेतुर्यच्छब्दस्य विधित्वे सः श्रवणमात्रेण पुरुषस्यावश्यमेव प्रवर्तकस्स्यात्। तेन च 'अकुर्वन् विहितं कर्म' इत्यादिबोधितं कर्मस्वातन्त्र्यं विहन्येत। शब्दस्य विधित्वे प्रवृत्तेस्स्वरूपविषयानजानतामपि लिङ्श्रवणमात्रेण प्रवृत्त्यापत्तिस्स्यात्। ज्ञापक एव हेतुः स्वरूपतत्कर्मसम्बन्धविषयकञ्च ज्ञानमपेक्षते। शब्दस्तु निरुक्तदिशा कारकहेतुरिति तृतीयोऽत्र हेतुः। शब्दस्य विधित्वे 'यजेत' इत्यादौ प्रकृतिप्रत्ययार्थयोस्समभिव्याहारानापत्तिः, सहाभिधानाभावात्। सहाभिधानो हि त्रिधा भवति। प्रत्ययेन प्रकृत्यर्थानुवादात्। यथा—एकः, द्वौ, बहव इति। प्रत्ययस्य प्रकृत्यर्थद्योतनाद्यथा 'कुमारी' इत्यत्र 'ई(ङी)'प्रत्ययः स्त्रीत्वद्योतकः। प्रत्ययेन प्रकृत्यर्थसम्बन्ध्यर्थान्तराभिधानात्, तद्यथा 'दण्डी'त्यत्र इना प्रकृत्यर्थसम्बन्ध्यर्थान्तरं तदाश्रयोऽभिधीयते। अवाचकस्य लिङादेः कथमपि सहाभिधानं न युज्यते।

ननु कर्तृसंख्यादयोऽर्थाः लिङादेरभिधेया इति सहाभिधानं स्यादिति चेत्, न, प्रवृत्तिहेतुभूतायाः कार्यरूपायाः शब्दभावनाया ऋते समभिव्याहारानुपपत्तेः। न हि लिङादेः प्रकृत्या सह समभिव्याहारमात्रमवभासते; किन्तु प्रकृत्यर्थ-

---

१. विधिविवेकः, पृ. ४; २. जैमिनिसूत्रम्-१.१.२।

विशिष्टप्रवृत्तिभावनाया अभिधायकस्य लिङादेः समभि-व्याहारोऽवभासते न चानभिधायकशब्दस्वरूपमेव विधिमुरीकुर्वतां तत्सम्भवति। इदमस्ति चतुर्थमत्र कारणम्। पञ्चमञ्चात्र कारणं यद्विधेरयं महिमा यत् स अश्रुतफलेषु वेदवाक्येष्व-न्यथाऽनुपपत्त्या स्वर्गादिफलमध्याहरति, यथा पितृ-पिण्डादियज्ञादिषु, क्वचिच्च क्रतूपकारकल्पनां करोति, यथा समिदादौ। एतद्द्वयं शब्दविधिवादेऽसम्भवम्। न हि लिङादेः कश्चनार्थविशेषो यस्यान्यथाऽनुपपत्त्या फलं कल्प्येत। शब्दरूपस्य प्रवर्तकलिङ उपपत्तिस्तु पवनादिवर्तिन इवापि सम्भवति। तस्माद्धेतुपञ्चकान्न विधिः शब्द इति।

**व्यापारविधिवादः**

ननु निरुक्तकारणेभ्यो न हि शब्दः प्रवर्तनारूपो विधिर्यदि स्वीकर्त्तुं शक्यते, तदा शब्दव्यापार एव प्रेरणाख्यो विधिरित्यङ्गीकुर्वन्तु भवन्तः। अस्मिन्विषये आचार्यस्य कुमारिलभट्टस्यापि सम्मतिः—'अभिधाभावनामाहुर-न्यामेव लिङादय' इति[१]। वैदिकमन्त्रघटका लिङादिप्रत्ययाः (अन्याम्, आर्थी-भावनाख्यपुरुषप्रवृत्तिभिन्नाम्) अभिधाख्यस्य विशेषरूपस्य व्यापारस्य वाचका भवन्तीत्यर्थः। अयमेव 'शाब्दीभावना' प्रेरणा वोच्यते। शाब्दीभावनाया भिन्नाऽऽर्थीभावना आख्यातसामान्यस्य धर्मः।

मतमिदञ्चिखण्डयिषुराचार्यो मण्डनमिश्रः अभिधा भावनेति शब्दमुभयथा व्युत्पादयति—'अभिधाया भावना', 'अभिधा च सा भावने'ति च। भावना, प्रेरणा, शब्दव्यापार इति च शब्दान्तरम्। प्रथमदृष्ट्या 'अभिधा'शब्दस्य कर्तृव्युत्पत्तिः, करणव्युत्पत्तिर्वा विधीयते, तेन च विधिं वक्त्यभिधाशब्दः[२]। तस्याभिधेयो 'भावने'ति[३]। शब्दस्य व्यापारोऽयमभिधायाः पृथगित्यवगन्तव्यः शब्दवृत्तिरूपायाः। व्युत्पत्त्यन्तरानुसारं शब्दस्य स्वाभिधेयार्थज्ञानजननोपयोगी अभिधाख्यव्यापार एव विधिर्लिङाद्यर्थः[४]। अयमस्ति शब्दस्याभिधाशक्तिरूपो व्यापारः।

---

१. अभिधां भावनामाहुरन्यामेव लिङादयः। अर्थात्मभावना चान्या सर्वाख्यातेषु गम्यते।। लिङोऽभिधा सैव च शब्दभावना सर्वाख्यातेषु गम्यते।। (श्लो.वा.)

२. अभिधीयतेऽनेनेति व्युत्पत्त्या अभिधाशब्देन विधिशब्द उच्यते। (मीमांसान्या. पृ. १८२)

३. अभिधायाः शब्दस्य भावनां प्रवर्तनामाहुरित्यर्थः। (न्यायकणिका, पृ. १२)
अभिधेय एव तु लिङादिशब्दानां पुरुषं प्रति प्रयोजकव्यापार आत्मीयः प्रवर्तना।
(विधिविवेकः, पृ. १२)

४. अभिधैव भावनाविधिर्लिङाद्यर्थ इति। (वि.वि., पृ. १६)
नाभिधेया भावनाऽभिधाभावनेति, अपि त्वभिधैवार्थाभिधाव्यापारः शब्दस्य भावना-विधिर्लिङाद्यर्थ इति। (न्यायकणिका, तत्रैव)

**उभयव्युत्पत्त्यनुसारिव्यापारविधिवादखण्डनम्**

प्रथमव्युत्पत्त्यनुसारं यद्व्याख्यानम्—'शब्दाभिधेयः प्रवर्तनाव्यापारो विधि'रिति तच्चिखण्डयिषया कारिकामिमामवतारयति आचार्यमण्डनमिश्रः—

न प्रयोगानिरूप्यत्वाद्वैयर्थ्यात् पूर्वदोषतः।
अप्रवृत्तेः फलायोगाद्रूपोक्तेर्व्याप्तितः श्रुतेः[1]।।

'प्रेरणे'ति न शब्दव्यापारः, तस्य चेतनपुरुषधर्मत्वात्। न च यथा 'कारीषोऽग्निरध्यापयती'त्यध्ययनप्रवृत्तौ समर्थं शीतापनोदनमध्येतुर्भावयन् कारीषोऽग्निरध्ययने प्रवर्तयति पुरुषम्, एवं लिङादयोऽपि प्रवृत्तिसमर्थं किञ्चिदुपकारं पुरुषस्याचरन्तः स्वव्यापारेण प्रवर्तयिष्यन्तीति वाच्यम्, शीतापनोदनमिव शब्दस्य प्रेरणानिरूपकस्य व्यापारस्याभावात्। कुत इति चेत्, न, अनुपलब्धेः। पवनादिरिव प्रतीतव्यापारान्तरानिरूपितः स्वभावत एव लिङादिः प्रेरक इत्यपि न युक्तमुक्तशब्दविधिवाद इवाप्रामाण्यादिदोषप्रसङ्गात्। शब्दस्य प्रवृत्तिकारकत्वे स्वीकृते प्रवृत्त्यङ्गस्य लिङादिशब्दाभिधेयव्यापार-स्याभ्युपगमोऽनर्थकश्चेति। किञ्च, शब्दव्यापारात्मनोरीकृतेनापि प्रवर्तनाव्यापारेण न पुरुषप्रवृत्तिः, शब्दे स्वाम्यादिरिवार्थानर्थप्राप्तिपरिहाराद्यनुविधानकारणाभावात्। अननुविधेयेन जडशब्देन च कथं प्रवृत्तिः? ननु फलप्राप्तिरेवानुविधान-कारणमिति चेत्, न, फलस्यैव प्रवृत्तिकारणाभ्युपगम प्रसङ्गाद् अलं शब्दस्य प्रवर्तनाव्यापारेण। शब्दव्यापारादेव फलावगतेर्न फलेन व्यापारवैयर्थ्यमिति चेदन्नोच्यते, शब्दे प्रवर्तयितरि फलस्यायुक्तत्वात्। आप्ते हि सप्रत्ययक्रिये हितकरे एव प्रवर्तपितरि अन्यथानुपपत्त्या फलावगमः।

अयमर्थः—चेतनाप्तोपदेष्टुरुपदेश-क्रियाविषयस्य उपदिष्टस्यार्थस्य प्रमाणान्तरेण संवादे सत्यन्यथानुपपत्त्या सोऽर्थः फलस्यावगमको भवति। न च शब्दे तादृशोऽर्थः कश्चन योऽनुपपद्येत। प्रवर्तनारूपश्चार्थो वायोः प्रवर्तनाव्यापार इवान्यथानुपपत्तिं विनापि सम्पद्यते। अपि च लिङ्व्यापारस्यैव विध्यभ्युपगमे लिङः स्वरूपविशेषोऽभिधातव्यः, येन युक्ता प्रवर्तना विधिरभिधीयेत। न च लिङादिसन्निधानमेव स स्वरूपविशेष इति वाच्यम्, सन्निधानाविशेषादर्थस्यापि तद्व्यापारवत्त्वप्रसङ्गात्। एभिर्हेतुभिरभिधातुं शक्यते, प्रवर्तनाव्यापारो लिङादिशब्दस्याभिधेयो नास्तीति।

---

१. विधिविवेकः, का. ०४)

'प्रवर्तना'स्वरूपा भावना लिङादिशब्दस्याभिधेय इति नास्ति 'अभिधाभावना' शब्दस्यार्थः। परञ्च शब्दस्याभिधाव्यापार एव लिङ(विध्य)र्थः। एतत्खण्डने मिश्रस्येयमस्ति कारिका—

प्रवृत्तेः सर्वतोऽर्थे वा प्रसङ्गात्कार्यतो गतेः।
अस्थानान्नियतेर्हेतोरभावाच्चाभिधैव न[१]।।

**अस्या अयं भावः**—यदि अभिधैव विध्यर्थस्तदा घटादिशब्देभ्योऽपि प्रवृत्त्यापत्तिः, तेष्वपि स्वाभिधेयनिरूपिताभिधायाः सत्त्वात्। ननु लिङाभिधेय-निरूपिताभिधैव लिङर्थ इति चेत्, न, तस्याभिधेयविशेषस्यैव प्रवर्तकत्वापत्तेः, न त्वभिधायाः। अन्वयव्यतिरेकाभ्यामभिधेयविशेषावगमे सति प्रवृत्तेः। अपि चानन्यलभ्यो हि शब्दार्थ इत्येष नियमः। अर्थप्रतीतिलक्षणकार्योन्नेयाया अभिधाया अन्यलभ्यत्वाच्छब्दार्थत्वमयुक्तम्। अपि चाभिधाया विध्यर्थत्वेऽ-नवस्थापातः। तथा हि, अभिधात्माऽयं विध्यर्थः शब्दस्याभिधाव्यापारेणैव बोध्यः। सोऽपि पूर्वाभिधातुल्यत्वात् शब्दार्थः सम्पन्नः, यस्य बोधायाभिधान्तरं कल्प्यते। एवमुत्तरोत्तरमभिधा शब्दार्थकोटौ प्रविशति यस्या ज्ञानायाभिधान्तरं कल्प्यते। अयमेवानवस्थापातः। अर्थाभिधैवाऽपेक्षतेऽभिधां नाभिधेति चेत्, न, नियामकस्य हेतोरभावात्। एवञ्चोभयविधाऽभिधा न विधिरिति प्रतिपादितम्।

**अर्थविधिवादखण्डनम्**

आज्ञादयोऽर्था न विधिः, तेषां प्रेरकपुरुषस्याभिप्रायविशेषरूपत्वात्। न च तदपौरुषेये वेदे सम्भवति[२]। तस्मादेव प्रवर्तनामात्रमपि न विधिः। आज्ञादिविशेषाणां वेदे यदि अभावस्तर्हि का कथा तेष्वनुस्यूतस्य प्रवर्तनासामान्यस्य? निर्विशेषस्य सामान्यस्याभावात्।

अपि च प्रवर्तयितुर्व्यापारः प्रवर्तना। न च वेदे कश्चन प्रवर्तकः। न च शब्दरूपो वेदः प्रवर्तकः, चेतनधर्मः प्रवर्तना नाचेतने वेदे सम्भवतीति हेतोः[३]। ननु वेदे स्वर्गादिफलार्थित्वमेव प्रवर्तनाव्यापारः स्यादिति चेत्, न, 'इच्छा'रूपस्य 'इच्छासमवाय'रूपस्य वा तस्य पुरुषगतस्य फलेऽसत्त्वात्। फलेऽसतस्तस्य फलाप्रवर्तकत्वाच्च। फलस्य व्यापारेण पुरुषस्य कर्मणि प्रवृत्तिरिति चेदुच्यते, फलादन्यस्मिन् कस्मिन्नपि सर्वत्र प्रवृत्तिप्रसक्तेः। फलादन्यस्मिन् प्रवृत्तावन्यत्वाविशेषात्क्वचिदपि प्रवर्तेत।

---

१. वि.वि., का. ०५, पृ. १६।
२. 'अपौरुषेये प्रैषादिनृधर्मो नावकल्पते'। (वि.वि.,का. ६, पृ. १७)
३. न च प्रवर्तनामात्रमविशेषमकर्तृकम्।। (वि.वि., का. ०६, पृ. १८)

**प्रभाकरमते विधिः**

नियोगो विधिरिति प्राभाकराः। नियोगः स्वसिद्धये स्वविषये नियोज्यपुरुषं प्रवर्तयति[१]। कार्यम्, 'अपूर्व'श्चेत्यादयो विधिपर्यायाः। विधिवाक्यश्रवणसमनन्तरं 'ममेदं कार्यमि'ति यो जानाति स नियोज्यः। यथा— 'स्वर्गकामो यजेते'[२]त्यत्र स्वर्गकामनावान्पुरुषः। नियोज्यः पुरुषस्तस्मिन्नेव कर्मणि नियोज्यो भवितुमर्हति यत्कर्म तस्य काम्यस्य स्वर्गादेः साधकं भवेत्। काम्यस्य स्वर्गादेश्चाव्यवहितप्राक्काले विद्यमानमेव वस्तु स्वर्गादिफलसाधनं भवितुमर्हति। यजतिश्चेयं क्रिया क्षणिका न हि सा स्वर्गादेरव्यवहितप्राक्काले स्थातुं प्रभवति, तस्मात् 'स्वर्गकामो यजेते'त्यादौ यजतेरन्यः प्रमाणान्तरावेद्यो नियोगाख्यः कार्यमित्यपरनामा लिङ्प्रत्ययाभिधेयो विधिः स्वीक्रियते। नियोगोऽयमुक्त-वाक्यादृतेऽन्यप्रमाणागम्यः। प्रमाणान्तरावेद्यत्वादपूर्वोऽयं निगद्यते[३]।

चेतनपुरुषस्य चेष्टादयो ये व्यापारास्तेषामुद्देश्यः साध्यः कार्यमुच्यते। नियोज्यपुरुषस्य यागादिक्रियाविषयिणी कृतिरपूर्वाख्यं कार्यमुद्दिश्य प्रवर्ततेऽतो नियोज्यपुरुषस्य कृतेरपूर्वसिद्धिर्भवति। यागविषयिण्याः कृतेस्तत्प्रधानीभूतस्य कार्यस्यापूर्वस्योत्पत्तिर्भवति। तस्माद् यजेतेत्यस्यार्थः—यागविषयकोऽपूर्व इति। कार्यं स्वसिद्धये नियोज्यं प्रेरयत् स्वस्मिन् फलसाधनत्वमादधाति, नातः फलम्प्रति तस्याप्राधान्यम्। अपूर्वाकल्पने नियोज्यस्य काम्ये फले स्वर्गादावप्रवृत्तिः प्रसज्येत।

**तत्खण्डनम्**

अपूर्वाख्यस्य नियोगस्य खण्डने 'मण्डनमिश्रो' विकल्पयति— शब्दप्रमाणवेद्योऽयमपूर्वो वाक्यर्थः, पदार्थो वा? नाद्यः, तस्य वाक्यार्थत्वानापत्तेः। अन्विताभिधानवादिनस्तव मते पदार्थान्तरसमभिव्याहारे प्राप्तविशेषपदार्थत्वमेव वाक्यार्थत्वम्। अपूर्वस्यापदार्थत्वे तस्य वाक्यार्थत्वा-भावात्। किञ्चाभिहितान्वयवादिनाम्मतेऽपि प्रवृत्तिनिवृत्त्याश्रयः पदार्थानां सम्बन्धविशेषो हि वाक्यार्थः। असम्बन्धरूपस्य नियोगस्य वाक्यार्थता कथम्? सम्बन्धविशेषः सम्बन्धिविशेषनिरूपितो भवति। सम्बन्धिनश्च पदार्थास्तन्नि-योगेनापि पदार्थेन भाव्यम्। तदपदार्थभूतो नियोगो न वाक्यार्थ इति।

---

१. नियोगः स्वसिद्धये पुरुषं नियुञ्जानो नियोग इत्यभिधीयते। (न्या.क, पृ. ५३)

२. आपस्तम्बगौतमसूत्रम्-१०.०२.०८।

३. प्रमाणान्तरागोचरः शब्दमात्रालम्बनो नियुक्तोऽस्मीति प्रत्यात्मवेदनीयः सुखादिवद् अपरामृष्ट-कालत्रयो लिङादीनामर्थो विधिः। (वि.वि., पृ. ३५)

नान्त्योऽपि, न हि नियोगः पदार्थोऽपि भवितुमर्हति, शब्देतर-प्रमाणागोचरस्य नियोगस्य पदार्थत्वाभावात्। पदार्थो ह्यवापोद्वापात्मकानुमानेन स्वसम्बन्धिशब्देन सम्बन्धितया ज्ञातः सन् पदार्थत्वं लभते। शब्दप्रमाणेनैव तज्ज्ञाने स्पष्टमन्योन्यसंश्रयः। शब्देन प्रमितस्य नियोगस्य तेन सह सम्बन्धग्रहः, सम्बन्धग्रहे च प्रमितेः। अविदितसङ्गतिः शब्दोऽप्रत्यायकः। अविदितसङ्गतेरेव आज्ञादिषु मानान्तरसिद्धेषूपाधिष्वनुस्यूतनियोगस्य न ज्ञानं भवति।

अपि चापौरुषेये वेदे नियोक्तृव्यापारो नियोगोऽसम्भवी, तत्र नियोक्त्र्य-भावादिति दोषान्तरम्।

**नियोगस्य प्रमाणान्तरागोचरता**

नियोगः प्रमाणान्तरागोचरः शब्देतरप्रमाणाविषय इति प्राभाकराः। तत्र च हेतुः, 'अपरामृष्टकालत्रयत्वमि'ति। अस्यायं भावः, प्रत्यक्षादिप्रमाणान्तराणि सद्विषयकाणि। प्रत्यक्षादिप्रमाणानां विषयस्य सत्ता चास्ति—'कालभेदप्रयुक्तभेद' इति। न चायं नियोगो भूतत्वेन, वर्तमानत्वेनानागतत्वेन वा प्रतीयते। तस्मात्कालत्रयापरामृष्टत्वान्मानान्तरागोचरः शब्दैकप्रमाणवेद्यः।

**तत्खण्डनन्**

यदि कालत्रयभेदभिन्नो विषयः प्रमाणान्तरगोचरः, 'कुरु' इत्यनेन च प्रतीयमानो नियोगः कालत्रयापरामृष्टः, अन्यथा 'करोषि', 'अकार्षीत्', 'करिष्यसी'त्यादिना भेदापत्तिरिति चेत्, न, नियोगोऽयं शब्दतः कालत्रया-परामृष्टः, अर्थतो वा? नाद्यः, घटादिशब्देष्वपि मानान्तरागोचरप्रसङ्गात्। घटादिश्रुतयोऽपि कालत्रयापरामृष्टा भवन्ति। 'घट' इत्युक्तेर्न हि 'अस्ति', 'आसीद्', 'भविष्यति' वा भासते। नान्त्योऽपि, अत्यन्तासत्त्वप्रसक्तेः। कालत्रया-परामृष्टत्वमेवात्यन्तासत्त्वम्।

ननु सत्त्वन्नाम प्रमाणग्राह्यत्वम्, नियोगस्य च शब्दप्रमाणवेद्यत्वात्त-स्मिन्सत्त्वं घटत इति चेत्, न, प्रमाणग्राह्यत्वस्य सत्त्वानभ्युपगमादन्यथा-ऽभावस्याऽपि प्रमाणग्राह्यत्वात्सत्त्वापत्तिः। तस्मात्कालापरिच्छिन्नो नियोगः शब्दप्रमाण-ग्राह्योऽप्यसन् न हि सन् स मानागोचरः[१]।

किञ्च, कालत्रयापरामृष्टः पदार्थः शङ्कास्पदो भवति। वेदैकप्रमाणगम्योऽयं नियोगोऽपि शङ्कास्पदो भवेत्। तेन च वेदानां प्रामाण्यमपि पृच्छास्पदतां यायात्

---

१. पदार्थ एव वाक्यार्थो न च सोऽनन्यगोचरः।
नाऽकर्तृका क्रिया कालविविक्तश्च खपुष्पवत्।। (वि.वि., का. १४)

**नियोगस्य कार्यत्वखण्डनम्**

'यागादि'क्रियाः क्षणिकाः। स्वर्गादिफलाव्यवहितप्राक्काले स्थातुमशक्ताभ्य आभ्योऽपूर्वमुत्पद्यत इति प्राभाकराः। जन्योऽयमपूर्वः कार्यमित्यपि न युक्तम्, 'यावत्प्रतीयते तावत्कल्प्यते', 'स्वर्गकामो यजेत' इत्यादिविधिवाक्यैः स्वाम्यादिनियोक्त्रा कृताया आज्ञाया विषयीभूता यागादिक्रियाः कार्यत्वेन प्रतीयन्ते।

न च 'आचार्यनियोगः कर्त्तव्यः', 'राजशासनमनुष्ठेयम्' इत्यादिप्रतीतिसिद्धो नियोगः कार्यमिति वाच्यम्, नियोज्यस्य नियोक्तृत्वापत्तेः। तथा हि, नियोगस्य कर्त्ता नियोक्ता। यथा स्वामी आज्ञादेः। इदानीं नियोज्यस्य यागादिक्रियाया नियोगोत्पत्तौ नियोज्यो नियोगकर्त्ता सम्पन्नः। तस्य नियोक्तृत्वापत्तिः।

अपि च, नियोगस्य कार्यत्वे स्वर्गयागयोः परस्परमनन्वयापत्तिः, तयोः कार्यात्मना नियोगेनान्वयात्। स्वर्गयागयोरन्योन्यानन्वये 'स्वर्गकामो यजेत' इत्यादिवाक्यानां विशकलितपदार्थानां ज्ञानं पुरुषार्थसाधनं न स्यात्। पुरुषार्थसाधनमेव च जिज्ञासन्ते प्रेक्षावन्तः। ज्ञानाभावाच्चोक्तैर्वाक्यैः स्वर्गादिसाध्यम्प्रति पुरुषाणामप्रवृत्तिः स्यात्[1]।

किञ्च, लोकाच्छब्दार्थावगतिर्भवति। लोके च प्रेरकवाक्यैर्न तु नियोगस्य न वा नियोज्यकार्यम्प्रति तत्प्राधान्यस्य ज्ञानं भवति। अत्रायं हेतुः—विषयसिद्धौ न हि नियोक्त्रा नियोज्यो नियोज्यते, नापि नियोज्यो नियोक्तृवाक्यान्नियोगं प्रतिपद्यतेऽपि स्वकृतिव्याप्यतया। विषयसिद्धौ सत्यामननुष्ठानान्नियोगस्य। तस्माद्विषयसिद्धौ नियोक्तृनियोज्ययोः सम्प्रतिपत्तेः सम्बद्धविषयपरामेव साधनतामध्यवस्यति, न तु नियोगपराम्।

नन्वन्यल्लोके शब्दवृत्तमन्यद्वेदे। विवक्षापरो हि समन्वयो लोके शब्दानां पदार्थानाम्, नियोगपरो वेदे। तेन तस्य नियोगस्य कार्यता तत्र। सोऽयमस्मिन् पक्षे लोकविरोधलक्षणस्य गण्डकस्योपरि पौरुषेयत्वलक्षणः स्फोटः संवृत्तः। शब्दसामर्थ्यं हि लोकादवगम्यते, वेदे च शब्दसामर्थ्यावगतये नास्ति लोकेतरत्प्रमाणम्। लोकस्य च विवक्षापरता वेदे पौरुषेयत्वमापादयिष्यति।

अपि च, न लोके नियोगमात्रं प्रवृत्तिहेतुः सर्वस्य नियोगादप्रवृत्तेः। प्रवृत्तिहेतुस्तु 'अनुविधेयनियोगः'। अनुविधेयत्वं नियोक्तुरन्यनियोगात् प्रवृत्तिहेतुः। अनुविधानकारणं चार्थानर्थप्राप्तिपरिहारादिप्रमाणान्तरसिद्धम्। अपौरुषेये च वेदे नियोक्त्रभावात् कुतः पुनरनुविधेयः? क्व च प्रवृत्तिः?

---

१. वि.वि., का. १६।

शब्दस्य नियोक्तृत्वञ्च निरस्तमधस्तात्। स्वीकृतेऽपि शब्दप्रमाणे तस्यानुविधाने नास्ति किमपि प्रमाणम्।

तस्मात्सिद्धं लिङादिप्रत्ययाः मानान्तरागोचरस्य, कार्यात्मनः नियोगस्याभिधायका न सन्ति। न हि तेषामीदृशेनापूर्वाख्येन नियोगेन सङ्गतिग्रहः। न हि शब्दोऽगृहीतसङ्गतेरर्थस्याभिधायकः। अन्यथा कोऽपि शब्दः कस्याप्यर्थस्याभिधायकः स्यात्।

**सिद्धान्तपक्षः**

'विधिविवेक'ग्रन्थे श्रीमता मण्डनमिश्रेणाचार्यप्रवरेण 'इष्टसाधनत्वम्' एवोरीकृतं विधिरिति। तथा हि ते प्रतिपादयन्ति, यद्यपि विधेरन्वेषणे कृतेषु त्रिषु विकल्पेषु 'अर्थविधिवादो'ऽपि खण्डितस्तथापि न तस्यायमभिप्रायो यत्कोऽप्यर्थो नास्ति विधिरिति। आज्ञादय एवार्था वेदे नियोक्त्रभावाद् विधिरूपेणास्वीकृताः। 'उपदेश'रूपस्त्वर्थो विधिरूपेण स्वीक्रियत एव। अयञ्चापौरुषेये वेदेऽपि सम्भवति। आज्ञादिभिन्नस्योपदेशस्य चेतनैककर्तृकत्वाभावात्। लौकिकोऽप्ययमुपदेशो विधिर्भवितुमर्हति, प्रेरणात्मकत्वात्तस्य। ननु, आज्ञादिभिन्नोऽयमुपदेशः कथं प्रेरणात्मकः? प्रेरणात्मको वा कथमाज्ञादिभिन्नः? तत्रोच्यते, आज्ञादेर्विषयः (कर्म) नियोज्यस्य प्रयोजनं तिरस्कुर्वन् नियोजकस्यैव प्रयोजनं प्रमुखतयोपकल्पयति। उपदेशे तु उपदेशकस्य प्रयोजनमनादृत्य उपदेष्टव्यप्रयोजनं चिन्त्यते। अप्रवृत्तनियोज्यस्य प्रयोजनं मनसि कृत्वा कृत उपदेशे यथा—'भैक्ष्यं चरेत्, इत्यत्रावश्यमेव प्रवर्तना प्रतीयते। अत एव मण्डनमिश्रेण इदमुक्तम्—'अप्रस्थितचोदना'[1] इति।

शाबरभाष्येऽपि 'विशिष्टशब्दोच्चारणमुपदेश' इत्युक्तम्। शब्दवैशिष्ट्य-मर्थद्वारा गृह्यते। फलतोऽर्थोत्कर्षविशिष्टः शब्द उपदेशः। अर्थोत्कर्षश्च 'पुरुषार्थस्यानवगतोपायस्य अवगतिः'। तदेवमुपदेशस्य सम्पूर्णं लक्षणमस्ति—

विशिष्टः पुरुषार्थस्य शुद्धस्योपायमाह यः।
पुरुषार्थो यदा येन यो नरेणाभिकाङ्क्षते।।

पुरुषार्थस्योपायमनवगतमवगमयन्नुत्कर्षाद्विशिष्टः शब्द उक्तः[2]।

पुरुषार्थोपायताप्रतीतिर्लिङादिप्रत्ययेभ्यो न भवतीति शङ्कापि नोचिता, यतो हि, इष्टाभ्युपायं विना कोप्यर्थः पुरुषार्थप्रवृत्तिकारणं नास्ति। तथा हि,

---

१. उपदेशो नियोज्यार्थकर्माप्रस्थितिचोदना। (वि.वि., पृ. १६७)
अप्रस्थितस्याप्रवृत्तस्य पुंसः प्रस्थापना चोदनेत्यक्षरयोजना। (न्या.क., पृ. १७०)

२. वि.वि., का. २८, पृ. १७१।

प्रेक्षावतः पुरुषस्य शारीरिक्यो वाचनिक्यो वा सर्वाश्चेष्टाः प्रयत्नपूर्विकाः सम्पद्यन्ते। प्रयत्नश्च रागपूर्वको जायते। सुखानुशयी रागः, न हि दुःखविषयको न वाऽसुखविषयको किन्तु सुखविषयक एव भवति। लोकश्चेदं जानीते 'कष्टं कर्म' इति। कर्म दुःखरूपम्। दुःखरूपं कर्म यदि सुखसाधनमपि न स्यात्तदाऽस्मिन् कुतो लोकप्रवृत्तिः स्यात्। अत एव, सुखाभिलाषिणः प्रेक्षावतः पुरुषस्य दुःखमयेऽपि कर्मणि प्रवृत्तेः कारणमपि तस्य सुखसाधनत्वमेव। यद्धि, स्वज्ञानद्वारा प्रवृत्तिकारणीभूतामिच्छामुपस्थापयति। प्रथमं ज्ञानं, तत इच्छा, तदनन्तरञ्च प्रवृत्तिरित्येषः क्रमः। शब्दश्च यदि सुखसाधनं कर्म न प्रतिपादयेत् तर्हि क्रियायां प्रवर्तकोऽपि न स्यात्। तस्मादिदं मन्तव्यम्—क्रियाप्रवृत्तिजननरूपो व्यापारविशेषः 'प्रवर्तना'। सा चेष्टाभ्युपायः। यस्य प्रतिपादकाः सन्ति—लिङादिप्रत्ययाः (शब्दाः)[१]।

**'कर्त्तव्यता' विधिः (एकदेशिमतम्)**

वेदेऽतिशयश्रद्धासम्पन्नाः केचिदाचार्याः प्रतिपादयन्ति—'लोकस्य प्रवृत्तिः कर्त्तव्यतावगते'रिति। लोकस्य प्रवृत्तिरूपं कार्यमवलोक्य लिङादेः प्रवर्तकत्वानुमानं भवति। प्रवृत्तिरूपञ्च कार्यं प्रयोजकेन प्रयुक्तस्य लिङादेः श्रवणानन्तरं भवति, तच्च निश्चितमेव बुद्धिपूर्वकम्। बुद्धेर्विषयः कर्त्तव्यतैव। यस्याभिधायकाः लिङादिप्रत्ययाः। लोके कर्त्तव्यतार्थेन विदितसङ्गतिकाः शब्दा लिङादयो वेदेऽपि तमेव प्रतिपादयन्ति। लौकिकवचनानां वेदेभ्योऽयमेव भेदो यल्लौकिकी प्रवृत्तिः प्रमाणान्तरसापेक्षा भवति। दुःखरूपायां क्रियायाञ्च कर्त्तव्यतावगतिरिष्टसाधनताज्ञानपुरःसरा, तस्मात् कर्त्तव्यतावगतिस्तत्प्रमाणभूतापेक्षितोपायता-(इष्टसाधनता) पुरस्सरा भवति। अपौरुषेये च वेदे, न हि स्वार्थे प्रमाणान्तरापेक्षा, तेन अपेक्षितोपायतावगमनिरपेक्षतयैव कर्त्तव्यताबोधो भवति। तस्मात् कर्त्तव्यतैव विधिरिति स्वीकर्त्तव्यम्।

**खण्डनम्**

कोऽयं 'कर्त्तव्यता'पदार्थः? तत्रोत्तरमीयते 'प्रतिभे'ति। प्रतिभा च नियतसाधनाऽवच्छिन्नक्रियाप्रतिपत्त्यनुकूला प्रज्ञेति। एतल्लक्षणानुसारं प्रज्ञाविषयोऽस्ति—'क्रिया'। परं विधिरूपायाः प्रज्ञायाः क्रियाविषयत्वे क्रियाया अप्रतीतिः प्रसज्यते। यतो हि, सा त्रैकाल्यावच्छिन्नां क्रियां गोचरीकरोति, क्रिया तु वर्तमानादिना कालेनैकेन केनाप्यवच्छिन्ना भवति। न खलु 'करोमी'त्यादिना

१. पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः। प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम्।।
प्रवृत्तिसमर्थो हि कश्चिद्भावातिशयो व्यापाराभिधानः प्रवर्तना। सा च क्रियाणामपेक्षितोपायतैव।
(विधिवि., पृ. १७३)

प्रतीयमाना वर्तमानकालावच्छिन्ना क्रिया 'कुर्याम्' इत्यनेन प्रतीयमानायास्त्रैकाल्यावच्छिन्नक्रियाया अभिन्ना भवितुमर्हति। अतः क्रियाविषयायाः प्रतिभाया असद्विषयत्वात् तस्या अप्रामाण्यं प्रसज्यते। संशयविपर्ययाभ्यां व्यवहारानङ्गाभ्यां भिन्नेयं प्रतिभा अप्रामाणिक्यपि व्यवहारप्रवर्तिका। पुरुषप्रवृत्तिः प्रतिभाऽन्वयव्यतिरेकाभ्यां भवति[1]। शब्दभावना च प्रतिभानिबन्धनम्। सा चेह जन्मनि स्वाभिधेयेन गृहीतसङ्गतेः शब्दस्य स्यात् प्राग्भवीयजन्मनामनादिशब्दानां वा। एतत्खण्डने मण्डनमिश्रेणोक्तम्—'प्रतिभाया विषयः कः? सालम्बनेयं निरालम्बना वा? निरालम्बनेति वक्तुं न पार्यते, ज्ञानस्य निरालम्बनाभावात्। सालम्बनत्वे च न हि इष्टसाधनताया भिन्नः कोऽपि विषयः स्थिरीभवति[2]। इष्टसाधनतास्वीकारे चास्मत्पक्षपातः। इत्थं मण्डनमिश्रमते 'इष्टसाधनता' विधिः। लिङ्प्रत्ययार्थ इत्यर्थः।

**समीक्षणम्**

मीमांसादर्शने विधिविचारः प्रमुखत्वेन प्राप्यते। धर्मविचारपरं मीमांसादर्शनं 'चोदना'ख्यां विधिमाश्रयते। मन्ये, तस्मादेव आचार्येण मण्डनमिश्रेण 'विधिविवेक'ग्रन्थे मीमांसादर्शनस्य प्रमाणभूतयोर्भाट्टगुरुमतयोः पूर्वपक्षे समुपस्थापनं कृतम्। वेदप्रामाण्याभ्युपगन्तृषु सर्वेष्वास्तिकदर्शनेषु विधिविचारः संक्षेपेण विस्तरेण वोपलभ्यते। विधिविवेके नामग्राहं सर्वेषां दर्शनानां मतानि नोपलभ्यन्ते, तथाप्युक्तसम्प्रदायद्वयविवेचनक्रम एव यावान् विचारः कृतस्तस्मिन्नेव सर्वेषामन्तर्भावो भवति। इदमेव कारणं यदुत्तरवर्तिभिराचार्यैर्मण्डनमिश्रस्य 'इष्टसाधनत्वम्' विधित्वेन स्वीकृतम्, येन केनापि प्रकारेण सिद्धान्ततः।

यथा हि, वैयाकरणसम्प्रदायाभ्युपेतविधिविचारप्रचारे वक्तुं शक्यते, यत्क्वचिदाज्ञादि(विधि)नापि नियोज्यप्रयोजनप्राधान्यमवगम्यते, अतस्सोऽप्युपदेशः। तत्रापि इष्टसाधनंत्वमाश्रित्य विधिर्भवितुमर्हति[3]। अत एव नव्यवैयाकरणैरिष्टसाधनता विधिरभ्युपगता।

---

१. न हीदमित्थमनेन कर्त्तव्यमिति अनुपजातप्रतिभाभेदः प्रवर्तते प्रत्यक्षाद्यवगतेऽप्यर्थे। तत्र हि प्रमाणकार्यसमाप्तिः। प्रतिभानेत्रो हि लोक इतिकर्त्तव्यतासु समीहते। (वि.वि., पृ. १७६)

२. न निरालम्बनं ज्ञानं क्रियासाधनयोगिनि। सामान्येऽस्मिन् विप्रकृष्टे यच्छब्दवदुपायधीः।।
आलम्बनवती चेत्तदेवावबोद्धव्यं प्रवृत्तिनिबन्धनं, न च तदन्यदीहितोपायतायाः।
(वि.वि., पृ. १८१)

तथा च एतच्चोपरिष्टान्निपुणतरमुपपादयिष्यते। तथा चाभिमतसिद्धिः। (न्यायकणिका, तत्रैव)

३. याप्याज्ञादिभ्यः प्रवृत्तिः सापि कथञ्चिदपेक्षितनिबन्धत्वमुपाश्रित्यैव। अन्यथाऽभावात्। (वि.वि., पृ. १७४)

नैयायिकाभीष्टकृतिसाध्यत्वरूपायाः कर्त्तव्यतायाः खण्डने मण्डनमिश्रेणोक्तम्—शब्दभावनया प्रतीयमानायाः कर्त्तव्यताया ज्ञानं न सुकरम्। शब्दभावनाविषयः, शब्दोऽर्थो वेति निर्धारयितुमशक्यत्वात्। नाप्यत्र प्रमाणम्। किञ्च, कर्त्तव्यताज्ञानविषयोऽन्वयव्यतिरेकाभ्याम् 'ईप्सितोपाय' एव निश्चीयते[१]। स एव विधिरभ्युपगमनीयः। कार्यसामान्यम्प्रति प्रतिबन्धकाभावस्य कारणत्वात् प्रवृत्तिम्प्रति कथन्न तद्भविष्यतीति हेतोर्बलवदनिष्टाननुबन्धित्वन्न विधिः।

तत्रेष्टसाधनत्वस्य विधित्वमनभ्युपगन्तार उदयनाचार्याः कथयन्ति, इष्टसाधनत्वन्नास्ति विधिप्रत्ययस्याभिधेयार्थ इति। इष्टसाधनत्वस्याप्तपुरुषाभिप्रायविषयत्वाद् आप्ताभिप्रायविषयत्वात्तस्यानुमानं भवति[२]। इष्टसाधनत्वस्य विध्यर्थत्वखण्डन इयमस्ति कारिका तत्रभवतामुदयनाचार्याणाम्—

हेतुत्वादनुमानाच्च मध्यमादौ नियोगतः।
अन्यत्र क्लृप्तसामर्थ्यान्निषेधानुपपत्तितः[३]।।

तत्र प्रथमहेतुनिराकरणप्रसङ्गे वक्तुं शक्यते यद् 'अग्निकामो दारुणीं मथ्नीयात्, कुतः? यतस्तन्मथनादग्निरस्य सिद्ध्यति'। अनुमानमिदं लिङ्प्रत्ययस्याज्ञातसङ्गतिकपुरुषस्य ज्ञातसङ्गतिकाय पुरुषायाभिधानमात्रम्। अन्यथाऽनुमानप्रयोक्तुरपि इष्टसाधनत्वज्ञानं कथं भवेदिति? इदमेव समाधानं द्वितीयहेतौ कर्त्तुं शक्यते। आज्ञादीनुपदेशरूपत्वेन स्वीकृत्येष्टसाधनत्वज्ञानं सुकरमिति तु प्रतिपादितमेव।

किञ्च, वक्तुः प्रवृत्तिनिवृत्तिविषयाभिप्रायस्य विधिप्रत्ययार्थस्वीकारः[४], तेन चेष्टसाधनतानुमानं नोचितम्, प्रवर्तकस्याप्तत्वज्ञानं विनापि इष्टसाधनता-ज्ञानमात्रादपि प्रवृत्तिदर्शनात्। एवमष्टम्यां शताब्द्यां वर्तमानस्य मण्डनमिश्र-स्योत्तरवर्तिन 'उदयनाचार्याः' द्रविणप्राणायामेनेष्टसाधनत्वस्य विधित्वमभ्यु-पगच्छन्ति। न हि लोकाप्तत्वं कश्चन नियतो धर्मः, एक एव पुरुषः, कस्मैचिदाप्तः अपरस्मैचिच्चानाप्तो भवति। प्रवृत्तिकारणन्तु केवलमिष्टसाधनताज्ञानम्।

खण्डनमण्डनपूर्वकं यादृग् वर्णनं साङ्गोपाङ्गं विधेर्मण्डनमिश्रकृते 'विधिविवेके' समुपलभ्यते, तादृगन्यत्र दुर्लभम्। विध्यर्थस्य गूढाभिप्रायं विस्फोरयतानेनाचार्येण न केवलं मीमांसाशास्त्रस्यापि तु सर्वेषां शास्त्राणां महदुपकृतमिति।

●

---

१. वि.वि., कारिकाः-३७-४०, पृ. २१० तः २१५ यावत्।
२. न्यायकुसुमाञ्जलिः, पञ्चमः स्तबकः, चतुर्दशकारिकाया अवतरणम्।
३. न्यायकुसुमाञ्जलिः, का. १४।
४. विधिर्वक्तुरभिप्रायः प्रवृत्त्यादौ लिङादिभिः।
अभिधेयोऽनुमेया तु कर्त्तुरिष्टाभ्युपायता।। (न्या.कुसु., पञ्चमस्त., का. १५)

